# ॥ शुक्रस्तोत्रम् ॥

अथ शुक्रस्तोत्रप्रारम्भः ।

शृण्वन्तु मुनयः सर्वे शुक्रस्तोत्रमिदं शुभम् ।
रहस्यं सर्वभूतानां शुक्रप्रीतिकरं शुभम् ॥ १॥

येषां सङ्कीर्तनान्नित्यं सर्वान् कामानवाप्नुयात् ।
तानि शुक्रस्य नामानि कथयामि शुभानि च ॥ २॥

शुक्रः शुभग्रहः श्रीमान् वर्षकृद्वर्षविघ्नकृत् ।
तेजोनिधिर्ज्ञानदाता योगी योगविदां वरः ॥ ३॥

दैत्यसञ्जीवनो धीरो दैत्यनेतोशना कविः ।
नीतिकर्ता ग्रहाधीशो विश्वात्मा लोकपूजितः ॥ ४॥

शुक्लमाल्याम्बरधरः श्रीचन्दनसमप्रभः ।
अक्षमालाधरः काव्यः तपोमूर्तिर्धनप्रदः ॥ ५॥

चतुर्विंशतिनामानि अष्टोत्तरशतं यथा ।
देवस्याग्रे विशेषेण पूजां कृत्वा विधानतः ॥ ६॥

य इदं पठति स्तोत्रं भार्गवस्य महात्मनः ।
विषमस्थोऽपि भगवान् तुष्टः स्यान्नात्र संशयः ॥ ७॥

स्तोत्रं भृगोरिदमनन्तगुणप्रदं यो
  भक्त्या पठेच्च मनुजो नियतः शुचिः सन् ।
प्राप्नोति नित्यमतुलां श्रियमीप्सितार्थान्
  राज्यं समस्तधनधान्ययुतां समृद्धिम् ॥ ८॥

इति शुक्रस्तोत्रं समाप्तम् ।

॥ शुक्रस्तोत्रम् २ ॥
श्रीगणेशाय नमः ।
शुक्रः काव्यः शुक्ररेता शुक्लाम्बरधरः सुधीः ।
हिमाभः कुन्तधवलः शुभ्रांशुः शुक्लभूषणः ॥ १॥

नीतिज्ञो नीतिकृन्नीतिमार्गगामी ग्रहाधिपः ।
उशना वेदवेदाङ्गपारगः कविरात्मवित् ॥ २॥

भार्गवः करुणाः सिन्धुर्ज्ञानगम्यः सुतप्रदः ।
शुक्रस्यैतानि नामानि शुक्रं स्मृत्वा तु यः पठेत् ॥ ३॥

आयुर्धनं सुखं पुत्रं लक्ष्मींवसतिमुत्तमाम् ।
विद्यां चैव स्वयं तस्मै शुक्रस्तुष्टोददाति च ॥ ४॥

इति श्रीस्कन्दपुराणे शुक्रस्तोत्रं सम्पूर्णम् ।